# Shri Batukabhairava Aparadha Kshamapana Stotram

# श्रीबटुकभैरवापराधक्षमापनस्तोत्रम्

## Sanskrit Document Information



Text title : baTukabhairavAparAdhakShamApana

File name : shrIbaTukabhairavAparAdhakShamApana.itx

Category : shiva

Location : doc_shiva

Author : Atmarama

Description/comments : Batuka Bhairava Upasana

Latest update : August 18, 2018

Send corrections to : Sanskrit@cheerful.com



August 25, 2018

*sanskritdocuments.org*

Shri Batukabhairava Aparadha Kshamapana Stotram

# श्रीबटुकभैरवापराधक्षमापनस्तोत्रम्



ॐ गुरोः सेवां त्यक्त्वा गुरुवचनशक्तोपि न भवे
भवत्पूजाध्यानाज्जपहवनयागाद्विरहितः ।
त्वदर्चानिर्माणे क्वचिदपि न यत्नं व कृतवा-
ञ्जगज्जालग्रसतो झटिति कुरु हार्दं मयि विभो ॥ १॥

प्रभो दुर्गासूनो तव शरणतां सोऽधिगतवान्-
कृपालो दुःखार्तः कमपि भवदन्यं प्रकथये ।
सुहृत्सम्पत्तेऽहं सरलविरलः साधकजन-
स्त्वदन्यः कस्त्राता भवदहनदाहं शमयति ॥ २॥

वदान्यो मान्यस्त्वं विविधजनपालो भवसि वै
दयालुर्दीनार्तान् भवजलधिपारं गमयसि ।
अतस्त्वत्तो याचे नतिनियमतोऽकिञ्चनधनः
सदा भूयाद्भावः पदनलिनयोस्ते तिमिरहा ॥ ३॥

अजापूर्वौ विप्रो मिलपदपरो योऽतिपतितो
महामूर्खो दुष्टो वृजननिरतः पामरनृपः ।
असत्पानासक्तो यवनयुवतीव्रातरमणः
प्रभावात्त्वन्नाम्नः परमपदवीं सोऽप्यधिगतः ॥ ४॥

दयां दीर्घां दीने बटुक कुरु विश्वम्भर मयि
न चान्यस्सन्त्राता परमशिव मां पालय विभो ।
महाश्चर्यं प्राप्तस्तव सरलदृष्ट्या विरहितः
कृपापूर्णैर्नेत्रैः कजदलनिभैर्माखचयतात् ॥ ५॥

सहस्ये किं हंसो नहि तपति दीनं जनचयङ्-
घनान्ते किं चन्द्रोऽसमकरनिपातो भुवितले ।
कृपादृष्टेस्तेहं भयहर विभो किं विरहितो
जले वा हर्म्ये वा घनरसमुयातो न विषमः ॥ ६॥ घनरसनिपातो

त्रिमूर्तिस्त्वं गीतो हरिहरविधातात्मकगुणो
निराकारः शुद्धः परतरपरः सोऽप्यविषयः ।
दयारूपं शान्तं मुनिगणनुतं भक्तदयितं
कदा पश्यामि त्वां कुटिलकचशोभित्रिनयनम् ॥ ७॥

तपोयोगं सांख्यं यमनियमचेतः प्रयजनं
न कौलार्चाचक्रं हरिहरविधीनां प्रियतमम् । प्रियतरम्
न जाने ते भक्तिं परममुनिमार्गं मधुविधिं
तथाप्येषा वाणी परिरटति नित्यं तव यशः ॥ ८॥

न मे कांक्षा धर्मे न वसुनिचये राज्यनिवहे
न मे स्त्रीणां भोगे सखिसुतकुटुम्बेषु न च मे ।
यदा यद्यद्भाव्यं भवतु भगवन् पूर्वसुकृतान्
ममैतत्तु प्रार्थ्यं तव विमलभक्तिः प्रभवतात् ॥ ९॥

कियाँस्तेस्मद्धारः पतितपतिताँस्तारयसि भो !
मदन्यः कः पापी यजनविमुखः पाठरहितः ।
दृढो मे विश्वासस्तव नियतिरुद्धारविषया
सदा स्याद् विश्रम्भः क्वचिदपि मृषा मा च भवतात् ॥ १०॥

भवद्भावाद्भिन्नो व्यसननिरतः को मदपरो
मदान्धः पापात्मा बटुक ! शिव ! ते नामरहितः ।
उदारात्मन्बन्धो नहि तवकतुल्यः कलुषहा
पुनस्सञ्चिन्त्यैवं कुरु हृदि यथाचेच्छसि तथा ॥ ११॥

जपान्ते स्नानान्ते ह्युषसि च निशीथे पठति यो var जपति
महासौख्यं देवो वितरति नु तस्मै प्रमुदितः ।
अहोरात्रं पार्श्वे परिवसति भक्तानुगमनो
वयोन्ते संहृष्टः परिनयति भक्तान् स्वभुवनम् ॥ १२॥

इति श्रीसिद्धयोगीश्वरश्रीघनैयालालशिषेणात्मारामेण विरचितं
बटुकभैरवप्रार्थनापराधक्षमापन स्तोत्र ॥

